① शिरसिहरे: विवंसंस्थाय भगवदाराधनं
मंत्रहीनं क्रियाहीनं भक्तिहीनं हुताशनयच्छुतंदुम

विषय - पूजा

पेज - 1

- 31 × 11 × 0.1 c.m.

② विषय - व्याकरण

पेज - 1

- 27 × 14 × 0.1 c.m.

पङ्गोश्च ४।१।६८। पङ्गुः॥ उत्तरवाहीपथ्ये
४।१।६७। स्त्रियामङ् स्यात्। भद्रबाहुः
संज्ञायांकिम् वृत्तबाहुः॥

No-53

पिएसिहेः विवंसंस्थाप्य भगवद्दाराधनं मुपदिश्य यागं समापयेत्‌ माता त्वं सर्वलोकानां सर्वलोके
श्वरि प्रिये आज्ञयेत्वन्निमिमं मयपराधपात्रेव कृतं नारायणपादसिंधौ वा सत्वगुणसागरेणानंदसजगन्ना
थ केवलं कृपया तव अर्द्धं नयत्कृतेनतेनविभो रक्षीकर्तुमर्हसि इति भगवंतं प्रार्थ्य ततोपाध्यस्तु तंप्रण
मोत्थापनतः गोभूमिहिरण्यरत्नाद्यैः वासोभिर्भूषणैरपि आचार्यं पूजयेच्छक्त्या ततश्च प्रणमेद्गु
विनत आचार्यस्तु प्रोक्षकार्यं कुर्यात्‌ अस्मिन्‌ तापादि पंचसंस्कार होमकर्मणि विधिविपर्यासन्नूनातिरि-
क्तं कृतप्रायश्चित्तपरिहारार्थं अनाज्ञातादि त्रयहोमं होष्यामि स्रुवेणाज्यमादाय ॐ अनाज्ञातं यदाज्ञा
तं यज्ञस्य क्रियते मिथु अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथं स्वाहा अग्नय इदं ॐ पुरुषः संमितो
यज्ञो यज्ञः पुरुषसंमितः अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथं स्वाहा अग्नय इदं ॐ
यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः अग्निष्टद्धोता क्रतुविद्विजानन्‌ यजिष्ठो देवा
ँ ऋतुशो यजाति स्वाहा अग्नय इदं संकल्पप्रभृति एतत्‌ दोषपर्यंतं मध्ये भावितमंत्रलोपक्रियालोपद्रव्य

अग्निष्टत् स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु स्वाहा ॥४॥

लोपन्यूनातिरेकस्वरविपर्यासादिविध्यपराधप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि ॐ भूः स्वाहा अ-
ग्नये इदं ॐ भुवः स्वाहा वायव इदं ॐ सुवः स्वाहा सूर्याय इदं ॐ भूर्भुवः सुवः स्वाहा प्रजापतय इदं के०

ना० मा० गो० वि० म० त्रि० वा० श्री० हृ० प० दा० श्रीविष्णवे स्वाहा श्रीविष्णवे परमात्मन इदं पद

स्यकर्मणोन्यूनमिह कर्म यदत्यरीरिचं यद्वा न्यूनमिहाकरं होमं अग्नये स्विष्टकृत इदं अस्मिन्नुतापादिपंचसंस्कार हो

मकर्मणि कर्मषाड्गुण्यार्थं केपा वादि होमं करिष्ये इष्टं स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु स्वा

५ हा मि ॐ केषु गर्वा स्वाहा केपावाय इदं एवं दामोदरान्तं द्वादशाहुतिः सप्त ते अग्ने समिधः सप्त जिह्वाः

सप्त ऋषयः सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा अग्नये सप्त-

वत इदं इति पूर्णाहुतिं हुत्वा प्राणायामं परिषेचनं अदितेनुमन्यस्व अनुमतेनुमन्यस्व सरस्वतेनुमन्यस्व

देवसवितः प्रासावीः इति अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् युयोध्यस्मज्जु-

हुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम इत्यग्निमुपस्थाप्य मंत्रहीनं क्रियाहीनं भक्तिहीनं हुताशन यद्धुतं तु म

प्र. ५५ ४

६

पङ्गोश्च ।४।१।६८॥ पङ्गुः ॥ ऊरूत्तरपदादौपम्ये ।४।१।६९॥ उपमानवाचि पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । करभोरूः ॥ संहितशफलक्षणवामादेश्च ।४।१।७०॥ अनौपम्यार्थं सूत्रम् । संहितोरूः सैव शफोरूः । शफौ खुरौ । लक्षणा शब्दाद्दीर्घश्चापि च । लक्षणोरूः । वामोरूः ।
कद्रुकमण्डल्वोश्छन्दसि ।४।१।७१॥
।वा। सहितसहाभ्यां चेति वक्तव्यम् । सहितोरूः ॥ संज्ञायाम् ।४।१।७२॥ कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात् ।
कद्रूः । कमण्डलूः । संज्ञायां किम् । कद्रुः । कमण्डलुः । इत्यादि । शार्ङ्गरवाद्यञो ङीन् ।४।१।७३॥ शार्ङ्ग
रवादेरञो योऽकारस्तदन्ताच्च । जातिवाचि ङीन् स्यात् । शार्ङ्गरवी । बैदी ॥ यङश्चाप् ।४।१।७४॥
यङन्तात् स्त्रियां चाप् स्यात् । कारीषगन्ध्या ॥ आवट्याच्च ।४।१।७५॥ अस्माच्चाप् स्यात् । आवट्या ॥ तद्धि
ताः ।४।१।७६॥ आपञ्चमसमाप्तेरधिकारोऽयम् । यूनस्तिः ।४।१।७७। युवन् शब्दात् तिप्रत्ययः स्यात् तद्धितः ।
युवतिः ॥ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।४।१।७८॥ गोत्रावयवात् ।४।१।७९॥ क्रौड्यादि
भ्यश्च ॥४।१।८०। दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ॥४।१।८१॥ [illegible]

१६

नङीष्। इत्यवादू चर्मी छिन्मोहि चर्मे॥ सख्यशिश्वीति भाषायाम्।४।१।६२। इति धातुः प्रकारे भाषा
यामित्यस्मादनन्तरं द्रष्टव्यः। छन्दस्यपि क्वचित्। सखी। अशिश्वी॥ जातेरस्त्रीविषयादयोपधात्।४।
१।६३॥ जाति यानि यत्तु च। स्त्रियांविषयत्वयोपधं ततः स्त्रियांङीष् स्यात्॥ आकृतिग्रहणा जातिः।
अनुगतसंस्थानव्यङ्ग्येत्यर्थः। तटी। लिङ्गानां च न सर्वभाक्। औपगवी। कठी। बह्वृची॥ पाक
कर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च।४।१।६४। पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि
ङीष् स्यात्। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवा-
ली। इतो मनुष्यजातेः।४।१।६५॥ ङीष् स्यात्। दाक्षी। योपधादपि॥ उदमेयस्यापत्यं औदमेयी।
मनुष्येति किम्। तित्तिरिः। ऊङुतः।४।१।६६॥ उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्।
कुरूः। अध्वर्युः॥ बाह्वन्तात्संज्ञायाम्।४।१।६७। स्त्रियामूङ् स्यात्। मद्रबाहूः। संज्ञायां किम्। वृत्तबाहुः।